शौ०
१

श्रीमद्धरिद्राचूर्णमंडितायजेजूराचलनिवासायभक्तजनमानस
सरोरुहायत्सालसाविलासायनमः॥ ॥श्रीगणाधिपंनमस्कृत्य
प्रत्यूहाद्रिपविंकविं॥त्र्यंबकेणाशुबोधायक्रीयतेशौचनिर्णयः॥
१॥ अर्थतःशब्दतःश्चेहपौनरुक्त्यंनदुष्यति॥स्फुटबोधायबाला
नांग्रंथोयंरच्यतेयतः॥२॥ अत्रप्रागुपनयनात्कामचारवादभक्षाय
तिगौतमोक्तेरनुपनितस्यपित्रादिसंस्कारंविनाशौचेनाधिका
रः॥उपनयनोत्तरंपित्रब्रह्मचारिणःपित्राद्यंतकर्मकरणएवाशौ-
चाधिकारोनान्यत्रतस्माद्विजानांसमावर्तनोत्तरंनिरंकुशाशौचा
धिकारः॥स्त्रीशूद्रयोस्तुविवाहस्यउपनयनस्थानापन्नत्वात्तविवाहो
त्तरमेवाशौचाधिकारः॥१॥ अथजननाशौचं॥तत्रगर्भिण्याःमास

त्र्यंतं त्रिरात्रं॥ चतुर्थमासे चतुरात्रमशौचमस्पृश्यत्वं च पित्रादि
सपिंडानां स्नावमात्रे स्नानाच्छुद्धिः॥ ३॥ गर्भिण्याः पंचमषष्ठमास
योर्गर्भनाशः पात इत्युच्यते॥ तत्र गर्भिण्याः माससमसंख्यया पंच
षट्चदिनातिक्रमेणास्पृश्यत्वावहमाशौचं पित्रादिसपिंडानां तु
त्रिरात्रं॥ जननाशौचं॥ मृताशौचं तु नास्ति॥ इदमेवत्वावसर्यंतं स
र्ववर्णसाधारणं वयोवस्थानिमित्तत्वात्॥ ४॥ गर्भिण्याः सप्तममास
प्रभृति प्रसवे सर्वेषां मातापित्रादीनां सपिंडानां विप्राणां दशाहं॥
क्षत्रियाणां द्वादशाहं॥ वैश्यानां पंचदशाहं॥ शूद्राणां मासं॥ सच्छू
द्रस्य मासार्द्धं जननाशौचं॥ मृताशौचं तु नास्ति॥ सापत्नमातुः स
र्वत्र पितृवत्॥ ५॥ जननाशौचे गर्भिण्या दशाहमस्पृश्यत्वं॥ पितुः

शौ० २

सापत्नमातुश्चस्नाना।आगत्यागस्पृत्रयत्नं।स्नानोत्तरंस्पृत्रयत्व मेव॥किंतुसर्वत्रसपिंडानांकर्मानधिकारमात्रं।तत्रापिनालछे दात्पूर्वंजातकर्मदानादौपितुरधिकारः॥एवंप्रथमषष्ठदशमदि वसेषुजन्मदारव्यादेवतापूजायांचपितुर्वचनाधिकारः॥कूट स्थमारभ्यसप्तपुरुषपर्यंतंसपिंडा॥ततःसमोदकाः।तत्रसप्त सगोत्राः।सोदकानांत्रिरात्रमाशौचं।सगोत्राणांस्नानमात्रं॥५॥ग र्भिण्याःदशाहोत्तरंपुत्रोत्सत्तौविंशतिदिनानिकन्योत्सत्तौमासप र्यंतकर्मानधिकारः॥६॥अथमृताशौचं॥तत्रतत्कर्मतोस्पृश्यत्वं कर्मानधिकारश्चेत्युभयंभवति।मृतजातेत्रिरात्रोसर्वेषांसपिंडा नांदशाहं।जननाशौचंमृताशौचंतुनास्ति॥७॥नालछेदात्पूर्व-

२

ञ्चिशौचं मृते मातुर्दशाहं॥ पित्रादिसपिंडानां त्रिरात्रं जननाशौचं च मृ
ताशौचं तु नास्ति॥८॥ नालच्छेदादूर्ध्वं शिशुमरणे दशाहं जन्मा-
शौचं सर्वेषां सपिंडानामस्ति मृताशौचं तु नास्ति॥९॥ दशाहानं
तरं नामकरणात्प्राक् शिशुमरणे स्नानमात्रेण सपिंडानां शुद्धिः
मातापित्रोस्त्रिरात्रं सुते मृते कन्यामृतौ त्वेकाहः॥ नाम्नः पूर्वं ख
ननमेव निर्यं नोदकदानादि अलंकरणं तु सर्वत्र भवति॥१०॥ ना
मकरणोत्तरं वर्षत्रयपर्यंतं दहनखननयोर्विकल्पः॥११॥ नामो
त्तरं दंतोत्पत्तेः प्राक् पुत्रमरणे दासपिंडानामेकाहः॥ खनने तु स्ना
नाच्छुद्धिः मातापित्रोरुभयत्रापि त्रिरात्रं॥ कन्यामृतौ तु त्रिपुरुषस
पिंडानां उभयत्रापि स्नानाच्छुद्धिः मातापित्रोरुभयत्राप्येकाहः

शौ०
२

॥१२॥दंतोत्पत्तेरूर्ध्वंवर्षत्रयपर्यंतंपुत्रमरणेदाहखननेवासपिंडा
नामेकाहः॥मातापित्रोस्त्रिरात्रं।कन्यामृतौतुत्रिपुरुषसपिंडानां-
स्नानाच्छुद्धिः।मातापित्रोस्त्रिदिनमाशौचं॥१३॥प्रथमवर्षादौकृतचू
डस्यपुत्रस्यमरणेपित्रादिसर्वसपिंडानांत्रिदिनमाशौचंनियतंदा
हश्चनियतः॥१४॥त्रिवर्षोर्ध्वंकृतचूडस्याकृतचूडस्यवापुत्रस्य
मरणेप्रागुपनयनात्पित्रादिसर्वसपिंडानांत्रिदिनमशौचंदाहए
वउदकदानादितूष्णीं।कृतचूडस्यभूमौपिंडदानंतूष्णीं॥१५॥क-
न्यायाःवर्षत्रयानंतरंवाग्दानात्प्राक्मरणेत्रिपुरुषसपिंडानामे
काहः॥मातापित्रोस्त्रिदिनंदाहोदकदानादितूष्णीमेव॥१६॥वाग्दा
नोत्तरंविवाहात्प्राक्मृतासुकन्यासुभर्तृकुलेपितृकुलेचसप्त

पुरुषसपिंडानां पित्रादीनां सर्वे [illegible]त्रि दिनमंत्रो धंदोहोदकदाना

दितूष्णीं॥१७॥ उपनयनोत्तरं मृतस्य पुरुषस्य सर्वेषां सपिंडानां वि

प्राणां दशाहं। क्षत्रियाणां द्वादशाहं। वैश्यानां पंचदशाहं। शूद्र

णां मासं। सच्छूद्राणां मासार्धं [illegible]र्ववर्णानां दशाहं वा सोदकानां त्रि

रात्रं। गोत्रजानां स्नानात् शुद्धिः॥१८॥ विवाहादूर्ध्वं कन्यायाः पितृ

गृहे मरणे माता पित्रोः॥ सोदरभ्रातुश्च त्रिरात्रं। पितृव्यादीनामे

काहः॥१९॥ ऊढायाः कन्यायाः पितृगृहे प्रसवे मृते च माता पित्रो

स्त्रिरात्रं। सोदरस्यैकरात्रं। पितृव्यादीनामेकाह इति केचित्॥२०

॥ ऊढायाः कन्यायाः पितृगृहे प्रसवे पित्रादीनामाशौचं नास्ति॥२१

ऊढायाः कन्यायाः पतिगृहे मरणे माता पित्रोस्त्रिरात्रं॥२२॥ मा

(७)

ध

तापित्रोर्मरणेतुत्पुत्र्यास्त्रिरात्रं। दशाहांतःदशाहोर्ध्वंकालंतरे व
त्सरांतरेपक्षिणी। अत्रैवातिक्रांताशौचं। स्मृत्यवचनाद्भवतिनान्य
था॥२३॥भ्रातृभगिन्योःपरस्परगृहमरणेपरस्परस्यत्रिरात्रं। गृहां
तरमृतेतुपरस्परस्यपक्षिणी॥२४॥मातुलमरणेभगिन्यपत्यस्यप
क्षिणि॥उपकारकमातुलमरणेतुत्रिरात्रं॥२५॥मातुलान्यामर
णेभर्तृभगिन्यपत्यस्यपक्षिणी॥२६॥उपनीतभागिनेयमरणेमा
तुलस्यमातुलभगिन्याश्चत्रिरात्रं। अनुपनीतेमृतेतुमातुलस्य
मातुलभगिन्याश्चपक्षिणी॥२७॥मातामहमरणेदुहित्रपत्यस्य
त्रिरात्रं॥२८॥दौहित्रमरणेमातामहस्यमातामह्याश्चत्रिरात्रं॥
अनुपनीतेमृतेतुमातामहस्यमातामह्याश्चपक्षिणी॥२९॥माता

दौहित्रे ४

ध



(8)

साच साक्षादेव सापत्नभ्रातुः स्नानाच्छुद्धिः ॥१॥

मह्यां मृतायां दुहितृपत्यस्य पक्षिणी ॥३०॥ श्वश्रूश्वशुरयोः मृतौ सत्यां जामातुः सन्निधौ त्रिरात्रं ॥ असन्निधौ पक्षिणी ग्रामांतरे चैकरात्रं ॥ ३१ ॥ जामातरि मृते श्वश्रूश्वशुरयोः स्नानाच्छुद्धिः एकाहमात्रो नमिति केचित् ॥ ३२ ॥ शालके मृते भगिनीभर्तुरेकाहः ॥ शालकसुतमरणे तु स्नानमात्रं ॥ ३३ ॥ पितृष्वसरि मृतायां भ्रातृपत्युस्य पक्षिणी ॥ ३४ ॥ मातृष्वसरि मृतायां स्वसृपत्युस्य पक्षिणी ॥ ३५ ॥ आत्मनः पितृष्वसृमातृष्वसृमातुलपुत्राः आत्मबांधवाः ॥ पितुः पितृष्वसृमातृष्वसृमातुलपुत्राः मातृबांधवाः एते त्रिविधाः बांधवाः बंधत्रयं एतेषु मृतेषु पक्षिणी ॥ पितृष्वस्रादिकन्यानामूढानां तु मरणे एकाहः ॥ ३६ ॥ दत्तकमृतौ पूर्वापरपित्रोः त्रिरात्रं ॥ सपिंडानामेकाहः ॥

३७॥ पूर्वापरपित्रोर्मृतौ दत्तकस्य त्रिरात्रं॥३८॥ दत्तकस्य पुत्रपौ
त्राणां मरणे जनने वा सपिंडानामेकाहः॥ ३९॥ सपिंडे पुत्री कृतेऽनर
त्तके तु मृते सपिंडानां स्यादहस्त्र्य॥४०॥ आचार्यमरणे शिष्यस्य त्रि
रात्रं। तत्पुत्रपत्न्योर्मरणे एकाहः उपनीयाध्यापक आचार्य इ
त्युच्यते। वैदैकदेशाध्यापक उपाध्यायः॥ तन्मरणे शिष्यस्यैक
रात्रं॥४१॥ शिष्यस्य स्वोपनीतस्य मरणे गुरोस्त्रिरात्रं॥ परोप
नीतस्य मरणे तु एकरात्रं॥४२॥ सहाध्यायिनो मृतौ एकग्रामीण
योरनूचानश्रोत्रिययोर्मृतौ चैकाहः। सांगवेदाध्यायी अनूचा
नः। वेदमात्राध्यायी श्रोत्रियः। अध्ययनशब्दोऽर्थस्यार्थज्ञान
पर्यवसायित्वं न्यायसिद्धं॥४३॥ असपिंडस्यापि श्रोत्रियस्य

मैत्र्यादिसंबद्धस्ययद्गृहेमरणं॥तद्गृहस्वामिनएकरात्रं॥४४॥बा
नप्रस्थेयतौषंढेचमृतेयुद्धमृतेचसपिंडानांस्नानमात्रं॥४५॥अ
थातिक्रांतशौचं॥ ॥तत्रजननेतिक्रांताशौचंनास्ति॥पितुःस्ना
नंतत्रापिभवति॥मृतकेपि अनुपनीतमरणादिनिमित्तकत्रिरा
त्रादिषु॥भगिनीमातुलादिमरणनिमित्तत्रिरात्रादिषुच॥अति
क्रांताशौचंनास्ति॥किंतुदशाहादिमृताशौचविषयमेव॥४
६॥दशाहमध्येजननेमरणेवाज्ञातपुत्रादीनांसर्वेषांशेषेणैवशु
द्धिः॥संस्कारमपिशेषेणैवसमापयेत्॥अस्थिपर्णशरसंस्कारम
पिशेषेणैवसमापयेत्॥४७॥अथत्रिरात्रमध्येसमानोदकम
रणज्ञातिसमानोदकानांशेषेणैवशुद्धिः॥त्रिरात्रेऽतिक्रांतेमुद

(१V)

शौ० ६

त्राहमध्येज्ञातेपिताशौचंकिंतुस्नानमात्रं। अयमेवन्यायःमातुला
दित्रिरात्रादिषुज्ञेयः॥४८॥मातापित्रोर्मरणेदूरदेशेऽपिवत्सरानंतर
मपिश्रवणेपुत्रोदशाहादिपूर्वमेवाशौचंकुर्यात्॥४९॥स्त्रीपुंसयो
ःपरस्परमरणेपरस्परस्यदेशांतरेवत्सरांतरेपिपूर्णंदशाहादिभव
ति॥५०॥सपत्नीषुपरस्परमृतौपरस्परस्यदेशाकालानपेक्षंदशा
हादिपूर्णमेवाशौचंभवति॥५१॥सपत्नमातुर्मरणेसंवत्सरोर्ध्वम
पिदेशांतरेपित्रिरात्रं॥५२॥औरसपुत्रेमृतेसंवत्सरोर्ध्वमपिदेशांत
रेपिमातापित्रोस्त्रिरात्रं॥५३॥दशाहोर्ध्वमेकदेशेज्ञातिमरणेज्ञा
तेमासत्रयपर्यंतंत्रिरात्रं॥षण्मासपर्यंतंपक्षिणी। नवमासपर्यं
तमेकदिनं। तदनंतरंस्नानमितिवृद्धवसिष्ठः॥पक्षत्रयपर्यंतंत्रिरा

६

त्रं॥षण्मासपर्यंतंपक्षिणी।वर्षपर्यंतमेकरात्रंतदूर्ध्वंस्नानमितिमा
धवदेवलः॥अत्रापरनापद्विषयत्वेनव्यवस्था॥५४॥दशाहोर्ध्वं
देशांतरे ज्ञातिमरणेज्ञातेत्रिपक्षपर्यंतंत्रिरात्रं।ततःमासषट्कपर्यं
तमहोरात्रंततोवर्षत्रयपर्यंतंदिवाश्रवणेअसायंरात्रिश्रवणे अ
प्रातरशौचं।वत्सरांतेस्नानाच्छुद्धिः॥इदमतिक्रांताशौचंसर्ववर्ण
साधारणं॥अत्रदेशांतरेज्ञातिमरणज्ञातेस्नानाच्छुद्धिरितिकेचि
त्॥तन्माधवोदाहृतविष्णुस्मृत्यज्ञानविलसितमितिज्ञेयं॥५५॥दे
शांतरंतुविप्रस्यविंशतियोजनात्परं।क्षत्रियस्यचतुर्विंशतियो
जनात्परं।वैश्यस्यसच्छूद्रस्यचत्रिंशद्योजनात्परं।असच्छूद्रस्य
षष्टियोजनात्परंज्ञेयं॥पक्षांतराणितुउक्तपक्षानुसारेणनेतव्या

शौ०
८

नि॥५६॥ अत्रायं निष्कर्षः यानि केऽपि गोत्रविषयकजननमरणाति
क्रांतशौचानि तानि जायापतिभ्यामुभाभ्यामविशेषानुष्ठेयानि। या
नि पुनर्भगिनीमातुलादिभिर्गोत्राशौचानि तेषु तेषु जायापति
मध्ये यत्संबध्धं यत्तत्तेनैवानुष्ठेयं नोभाभ्यामिति॥५७॥ आहिता
ग्नेर्मंत्रवद्दाहदिनमारभ्य पुत्रादिभिराशौचं कार्यं॥ आहिताग्नौ
प्रोषितमृते मंत्रवद्दाहात् पूर्वं पुत्रादीनामाशौचं संध्यादिकर्मलोप
श्च नास्ति॥५८॥ आहिताग्नेस्तु मरणाद्दिनमारभ्य पुत्रादिभिरशौ
चं कार्यं॥५९॥ अथ रात्रौ जनने मरणे वा रात्रिं त्रिभागां कृत्वा ऽद्यभाग
द्वये चेत्पूर्वदिनं तृतीयभागे चेदुत्तरदिनमारभ्याशौचं कार्यं॥ अ
र्धरात्रात्प्राक् पूर्वदिनं परतः तेतरदिनं प्राक् सूर्योदयात्पूर्वदिनम्

८

(15)

धर्वमुत्तरमितिपक्षत्रयंदेशाचारतोव्यवस्थितं। महाराष्ट्रेद्वेशोनुत्रा
द्यपक्षपक्षप्रचरति ॥६०॥ ॥अथाशौचसंपातेनिर्णयः॥ ॥तत्रदशा
हमृतकेदशाहंततोन्यूनंवामृतकमुपस्थितंभवतितदापूर्वशेषेण
शुद्धिः॥६१॥दशाहेसूतकेदशाहंततोन्यूनंवासूतकंपततितदापूर्व
शेषेणशुद्धिः॥६२॥सूतकमध्येदशाहन्यूनंवामृतकंपततितदात
दपूर्वेणशुद्धिर्नास्ति।तत्रसूतकस्यावशिष्टत्वेतुमृतकसमाप्त्यासू
तकमपिसमापनीयं॥६३॥त्वावशिष्टत्वेतुमृतकसमाप्त्यासूतकम
पिसमापनीयं॥त्र्याहादिरूपमृतकेसूतकेचदशाहमृतकेपतितेत
शाहसूतकपातेचपूर्वेणशुद्धिर्नास्ति॥६४॥मृतकेसूतकस्यसमस्य
वासंपातेपूर्वेणशुद्धिः। अधिकस्यापिसूतकस्यशुद्धिरितिशुद्धि

(१५)

चौ० ८

विवेककारः॥६५॥पूर्वाशौचमध्येउत्पन्नमपिपूर्वाशौचोत्तरं ज्ञातं
चेदुत्तरमपिकार्यं॥६६॥दशाहांतरात्रौयदिदशाहमाशौचंभवेत्त
दाप्रथमयामेज्ञातेपूर्वशेषेणशुद्धिः॥द्वितीययामेज्ञातेऽधिकमे
कदिनं॥तृतीययामेज्ञातेदिनद्वयमधिकं॥चतुर्थयामेज्ञातेऽशौ
चांतरसातिदिनत्रयमधिकंकार्यं॥६७॥त्र्यहाद्याशौचानांपरस्प
रंरात्रिशेषेसंपातेपूर्वणैवशुद्धिर्न त्र्यहादिदृष्टांतः॥६८॥वर्धित
द्वित्रिदिनमध्येआशौचांतरसंपातेचाधिकस्यपूर्वेणाशुद्धिर्नास्ति
॥६९॥समन्यूनयोस्तुपूर्वेणाशुद्धिरस्ति॥७०॥तत्सपिंडाशौचेनमा
त्रापिभर्तृणांमाशौचंनापैति॥७१॥मात्राशौचमध्येपित्राशौच
पातेपूर्वशेषेणैवशुद्धिः॥पितुःसंपूर्णाशौचेनशुद्धिरित्यन्ये॥

८

१८

तेषांशेषपदे संपूर्णलक्षणापत्तिः॥७२॥ पित्राशौचमध्ये मातृमरणे
तु पित्राशौचं समाप्य पक्षिणीमधिकां कुर्यात्॥ इदं दशमरात्रेरर्वाक्
भवति। दशमरात्र्यां तद्रात्रिचतुर्थयामे च मातृमरणे तु द्व्यहे हा
वेव न पक्षिणी॥७३॥ मातुर्भर्त्रा सहान्वारोहणे तु नाधिका पक्षिणी
७४॥ पूर्वाशौचेन शुद्धिः। सूतिकायामपि दर्शप्रेतपुत्रेषु नास्ति॥ अत्र
प्रेतपुत्रेतिपुत्रग्रहणं वचनांतरानुरोधेन॥७५॥ सूतके मृतकपातेपिं
उदानप्रतिबंधो नास्ति॥ मृतके सूतकसंपाते जातकर्मादितदानी
माशौचांते वा कुर्यादिति विकल्पः॥७६॥ मातुर्याधिकापक्षिणी
तन्मध्ये पितुरेकादशाहश्राद्धं कुर्यात्॥७७॥ शावस्पर्शे तु दिवा चे
न्नक्षत्रदर्शनाच्छुद्धिः। रात्रौ चेत्सूर्यदर्शनेन तदुक्तवासिस्यावन्नेषा

षामाशौचं तावत्संसर्गाशौचं कर्मानधिकारो नास्ति॥ किंतु स्पृश्य
त्वमात्रं तद्गृह्याणां द्रव्याणां नाशौचसंबंधः॥ ७८॥ स्नेहेन सवर्णनि
र्हरितदन्नाद्यन्नितद्गृहवासे च दशाहः॥ तदन्नमन्नेन तद्गृहवासेत्र्य
हः॥ गृहावासे अन्नाभक्षणे निर्हरणमात्रकृते चैकाहः॥ ७९॥ भृति
ग्रहेण सवर्णनिर्हारे तद्दोह चतुःमासाशौचं दशाहादि॥ ८०॥ वि
जातीयनिर्हारे विजातीयदोहेच चावजातीयमाशौचं॥ भृतियह
णा विजातीयनिर्हारे दोहेच चावजातीयात् द्विगुणं॥ ८१॥ सोदक
निर्हारे दशाहः असपिंडालंकरणे अज्ञानादुपवासः॥ अन्नाकौ
स्नानं॥ ज्ञानतः पादकृच्छ्रं॥ ८२॥ धर्मार्थमनाथसवर्णनिर्हारे क्रिया
करणेऽग्निदाने च द्विजस्यानंतयज्ञफलं स्नानाच्छुद्धिः प्राणायामो

18

पिस्पर्शश्च॥८३॥ धर्मार्थमनाथसवर्णनिर्हरणादावपिमातुल
स्यादिसंबंधेसतित्रिरात्रमाशौचं॥८४॥ अनुगमनेतुसपिंडेनदोषः
। असपिंडेपिअनाथक्रियायांनदोषः॥८५॥ समोत्कृष्टवर्णस्यत्र
वानुगमनेस्नात्वाहुताशनंस्पृष्ट्वासर्पिःप्राश्यपुनःस्नात्वाप्राणाया
मंकुर्यात्॥८६॥ हीनवर्णस्यवानुगमनेक्षत्रियेएकाहमाशौचं॥
वैश्यपक्षिणी॥ शूद्रेत्रिरात्रं। पूर्ववत्स्नानादिच॥८७॥ ब्रह्मचारि
णःसपिंडमरणेनाशौचं। अन्यस्यनिर्हारदाहाद्यौर्ध्वदेहिकेधिका
रोनास्तितत्करणेपुनरुपनयनंकृच्छ्रप्रायश्चित्तं॥८८॥ ब्रह्मचारि
णःपितृमात्राचार्योपाध्यायमातामहानांअंत्यकर्मकरणेदोषो
नास्ति॥ [illegible] तत्रस्नात्वाहमस्पृश्यत्वलक्षणामा

(१७)

शौचंदशादिनंसंध्याग्निकार्यादिकर्माधिकारोस्त्येव॥एकदिनम
स्पृश्यत्वमितिमाधवः॥पित्राद्याशौचेपिआशौचिनामन्नंब्रह्म
चारीनभक्षयेत्॥भक्षणेपुनरुपनयनं॥८॥ब्रह्मचारिणःपित्राद्यं
त्यकर्माकरणेतुपित्रादिमरणेपिआशौचंनास्ति॥समावर्त्तनोत्तरं
पूर्वमृतानांत्रिदिनमाशौचंकार्यमेव॥१०॥कृतजीवच्छ्राद्धेनकिम
प्याशौचंकार्यमितिहेमाद्रिः॥११॥वानप्रस्थयतिपतितैरपिकिम
प्याशौचंनकार्यंतेषामपीतरैर्नकार्यं॥१२॥परेषांसवर्णानामौर्ध्व
दैहिककरणेतज्जात्याशौचंकृत्वाकृच्छ्रत्रयाच्छुद्धिः॥हीनवर्णौर्ध्व
दैहिककरणेतुस्वजातीयमाशौचंकृत्वाकृच्छ्रत्रयात्द्वैगुण्यंत्रैगु
ण्यचातुर्गुण्यादिप्रायश्चित्तमनुष्ठेयं॥१३॥आहिताग्नेरस्थिदाह

प्रतिकृतिदाहेवा सर्वसपिंडानांदाहनात् दशाहाद्याशौचं। अनाहि
ताग्नेस्तु अस्थिदाहे पर्णशरदाहे च पत्नीपुत्रयोः पूर्वमगृहीताशौ
चयोः दशाहादि पूर्णमेव। गृहीताशौचयोस्तु तयोरपि संस्कारका
ले त्रिरात्रं पत्नीसंस्कारे पत्युश्चैवं सपत्न्योर्मिथश्चैवं। अन्यसपिंडा
नां पूर्वमगृहीताशौचानामनाहिताग्निसंस्कारकाले त्रिरात्रं॥ पूर्वं
गृहीताशौचानां तु सपिंडानां संस्कारकाले स्नानमात्रं। इदं त्रिरात्रा
दिकं दशाहाद्यूर्ध्वं संस्कारकरणे ज्ञेयं। दशाहमध्ये तु शेषदिवसैरे
वाशौचसिद्धिरुक्तत्वात्॥ १४॥ रजस्वलायास्तु यस्या विंशतिदिनो
त्तरं प्रायश्चो रजोदर्शनं भवति। तस्याः सप्तदशदिनपर्यंतं पुनः रजो
दृष्टौ स्नानमात्रं। अष्टादशे एकरात्रं। एकोनविंशतिदिने द्विरात्रं।

११

विंशतिप्रभृतित्रिदिनं यस्यास्तु विंशतिदिनादर्वाक्प्रायशोरजो
दर्शनं भवति। तस्याः दशदिनपर्यंतं स्नानमात्रं एकादशे एकरात्रं॥ द्वा
दशेद्विरात्रं। त्रयोदशमारभ्य त्रिरात्रं॥ ९५॥ अत्र मूलवचनानि मिताक्ष
रामाधवादिनिबंधेभ्यो ज्ञेयानी॥ विस्तरभयात् बालानां दुरधिग
मत्वाच्च न लिखितानि॥ ॥इति श्री आंगिरससमुद्भवकुलजलधि
सुधांशुपदवाक्यप्रमाणपारावारपारीणायायजूकशिरोरत्ननारा
यणभट्टात्मजरघुनाथसूरिसूनुत्र्यंबकपंडितविरचिताशौचनि
र्णयः संपूर्णः॥ ७॥ षडशीतिश्लोकानि वाक्यानि॥ मृतपत्योदशाहेतु
यदि पत्नी रजस्वला॥ प्रेतकार्यं सुतः कुर्यात् सकलं पादशादिकं
। स्नात्वा नारी चतुर्थेन्हि सवासा जलमाविशत्॥ केशान्मंगलसूत्रं ११

चकर्णस्थं कंचुकं त्युजेत॥ द्वग्रमे हन्यपुत्राचेद्भवेद्यदिरज ७स्व
ला॥ पत्कर्मृतस्यैवैकर्मकथंस्यादिति संच्राय॥ स्नात्वानारीच
तुर्थेन्हिशुद्धा भवतिपंचमे॥ दाहंविनाकृतंकर्मपुनः कुर्याद्य
थाविधि॥७॥ ॥ स्तुजेष्ठेच आषाढे सितपक्षेच पंचमी॥
मित्रवारे निशायांतु ग्रंथोयं लिख्यतेमया॥१॥ श्रीमणिमल्ल
मर्दनचरणसरोरुहार्पणं अस्तु॥१॥ श्रीरामचंद्रार्पणमस्तु

१२

